यथा नदीनां प्रभवः समुद्रो
यथाहुतीनां प्रभवो हुताशः ।
यथेन्द्रियाणां प्रभवं मनोऽपि
तथा प्रभुर्नो भगवानुपेन्द्रः ॥ १६ ॥

(निष्क्रान्ताः सर्वे).

---

## स्यमन्तकोपाख्यानम्

यदुकुले अनमित्रात् निघ्नः, निघ्नस्य प्रसेनसत्राजितौ पुत्रौ बभूवतुः। तस्य च सत्राजितस्य भगवान् आदित्यः सखा अभवत्। एकदा सत्राजितेन तुष्टः भास्वान् स्यमन्तकमणिं निजकण्ठादुन्मुच्य तस्मै दत्तवान् । स च तं स्यमन्तकाख्यं महामणिम् आत्मनिवेशने चक्रे। प्रतिदिनं तन्मणिः अष्टौ कनकभारान् स्रवति। तत्प्रभावाच्च सकलस्यैव राष्ट्रस्य उपसर्गा अनावृष्टिदुर्भिक्षादिभयं न भवति । अच्युतोऽपि तद्रत्नम् उग्रसेनस्य भूपतेः योग्यम् इति लिप्सांचक्रे। गोत्रभेदभयात् च शक्तोऽपि न जहार ॥

सत्राजितोऽपि अच्युतो मामेतत् याचिष्यत इति अवगतरत्नलोभः स्वभ्रात्रे प्रसेनाय तद्रत्नं दत्तवान्। तत् च शुचिना ध्रियमाणम् अशेषसुवर्णस्रावादिकं गुणम् उत्पादयति । अन्यथा य एव धारयति तमेव हन्ति। असावपि प्रसेनः स्यमन्तकेन कण्ठासक्तेन अश्वमारुह्य अटव्यां मृगयाम् अगच्छत्। तत्र च सिंहाद्वधमवाप । साश्वं च तं निहत्य सिंहोऽपि अमलमणिरत्नं आस्याग्रेण आदाय गन्तुमुद्यतः ऋक्षाधिपतिना जाम्बवता दृष्टो घातितश्च। जाम्बवानपि तन्मणिरत्नमादाय स्वबिलं प्रविवेश। सुकुमारकसंज्ञाय बालकाय च क्रीडनकमकरोत् ॥

अनागच्छति च तस्मिन् प्रसेने "कृष्णो मणिरत्नमभिलषितवान्। न च प्राप्तवान्। नूनम् एतदस्य कर्म नान्येन प्रसेनो हन्यते।" इति अखिल एव यदुलोकः परस्परं कर्णाकर्ण्यकथयत् ॥

विदितलोकापवादः भगवान् यदुसैन्यपरिवारः प्रसेनाश्वपदवीम् अनुससार। सिंहेन निहतं प्रसेनं दृष्ट्वा सिंहपदम् अनुसृत्य ऋक्षविनिहतं सिंहमपि अल्पे भूमिभागे दृष्ट्वा ऋक्षस्यापि पदानि अनुययौ। गिरितटे च सकलं यादवसैन्यम् अवस्थाप्य तत्पदानुसारी ऋक्षबिलं प्रविवेश। अर्धप्रविष्टश्च कुमारक्रीडनकीकृतं धात्रीहस्ते तेजोभिर्जाज्वल्यमानं स्यमन्तकं ददर्श। तं च स्यमन्तकाभिलाषचक्षुषम् अपूर्वं पुरुषमागतं अवेक्ष्य धात्री "त्राहि त्राहि इति व्याजहार। तदार्तनादश्रवणानन्तरं अमर्षपूर्णहृदयः स जाम्बवान् आजगाम। तयोश्च परस्परं युध्यतोः द्वयोः युद्धम् एकविंशतिदिनानि अभवत्। ते च यदुसैनिकाः तत्र सप्ताष्टदिनानि तन्निष्क्रान्तिम् उदीक्ष्य द्वारकामागताः 'हतः कृष्णः' इति कथयामासुः। तद्बान्धवाश्च तत्कालोचितम् अखिलम् उपरतक्रियाकलापं चक्रुः ॥

बान्धवैः कृतोपरतक्रियाकलापेन पुष्टिभूतः कृष्णः जाम्बवन्तं निर्जित्य तन्मणिं जाम्बवतीं नाम कन्यां च स्वीकृत्य द्वारकामाजगाम। यथानुभूतम् अशेषयादवसमाजे यथावदाचचक्षे। स्यमन्तकं च सत्राजिताय दत्वा मिथ्याभिशस्तिविशुद्धिम् अवाप ॥

सत्राजितोऽपि 'मया अस्य अभूतमलिनम् आरोपितम्' इति जातसन्त्रासः स्वसुतां सत्यभामां भगवते भार्यां ददौ। तां च अक्रूर कृतवर्मशतधन्वप्रमुखाः यादवाः पूर्वं वरयामासुः। ततः तत्प्रदानात् अवज्ञातमात्मानं मन्यमानाः सत्राजिते वैरानुबन्धं चक्रुः ॥

एकदा वारणावतं गते कृष्णे क्षिप्रमेव सत्राजितं शतधन्वा जघान। मणिरत्नं च आददे। पितृवधामर्षपूर्णा सत्यभामा शीघ्रं स्यन्दनारूढा वारणावतं गत्वा भगवते तत्सर्वं न्यवेदयत्। तया च "यदत्रयुक्तं तत्क्रियतां" इति उक्तः कृष्णः द्वारकाम् अभ्येत्य बलरामं एकान्ते प्राह। "मृगयागतं प्रसेनमटव्यां मृगपतिर्जघान। सत्राजितोऽपि अधुना शतधन्वना निधनं प्रापितः। तदुभयविनाशात् तन्मणिरत्नमावाभ्यां सामान्यं भविष्यति। तदुत्तिष्ठ। आरुह्यतां रथः। शतधनुर्निधनाय उद्यमं कुरु"। इति अभिहितः तथेति समन्विच्छितवान्॥

कृतोद्योगौ चैतौ दृष्ट्वा शतधनुः अक्रूरे तन्मणिं न्यासं कृत्वा अतुलवेगां शतयोजनवाहिनीं वडवामारुह्य अपाक्रान्तः। बलदेववासुदेवौ तमनुप्रयातौ। सा च वडवा शतयोजनप्रमाणं मार्गमतीत्य पुनरपि वाह्यमाना मिथिलावनोद्देशे प्राणानुत्ससर्ज। शतधनुरपि तां परित्यज्य पदातिरेव अद्रवत्। कृष्णोऽपि बलभद्रमाह। "तावदत्रैव स्यन्दने भवता स्थेयम्। अहम् अधमाचारमेनम् पदातिनम् अनुगम्य यावद्धातयामि। अत्र हि भूभागे दृष्टदोषाः हयाः। न एते अश्वाः भवता इमं भूमिभागम् उल्लङ्घ्य नेयाः"। तथेत्युक्तो बलभद्रः रथ एव तस्थौ। कृष्णोऽपि द्विक्रोशमात्रं भूमिभागमनुसृत्य दूरस्थः एव चक्रं क्षिप्त्वा शतधनुषः शिरश्चिच्छेद। तच्छरीराम्बरादिषु बहुप्रकारम् अन्विष्यन्नपि स्यमन्तकमणिं नावाप। बलभद्रं च उपगम्य आह। "वृथैव अस्माभिर्घातितः शतधनुः। अखिलजगत्सारभूतमणिरत्नं न प्राप्तम्"। इत्याकर्ण्य उद्भूतकोपः बलभद्रः वासुदेवमाह। "धिक्त्वां यस्त्वं अर्थलिप्सुः। तदयं पन्थाः स्वेच्छया गम्यताम्। न मे द्वारकया न बन्धुभिः कार्यम्। अलम् एभिः ममाग्रतोऽलीकशपथैः"। इत्याक्षिप्य विदेहपुरीं प्रविवेश। तत्रैव च तस्थौ। वासुदेवोऽपि द्वारकामाजगाम॥

वर्षत्रयान्ते च उग्रसेनप्रभृतिभिः यादवैः "न तद्रत्नं कृष्णेन अपहृतं" इति अवगन्तृभिः विदेहपुरीं गत्वा बलदेवः सान्त्वयित्वा द्वारकामानीतः । अक्रूरोऽपि उत्तममणिसमुद्भूतसुवर्णध्यानपरः सततं यज्ञानीजे द्विषष्टिवर्षाणि । एवं तन्मणिप्रभावात् तत्र उपसर्गदुर्भिक्षमरकादिकं नाभूत् । अथाक्रूरः स्वपक्षीयैः भोजैस्सह द्वारकामपहाय अपक्रान्तः । तदारभ्य तत्र अनावृष्टिमरकाद्युपद्रवाः बभूवुः । तस्य पुनरागमने उपद्रवः शशाम । कृष्णश्च चिन्तयमास । "नूनमस्य सकाशे स महामणिस्तिष्ठति । तस्य हि एवं विधाः प्रभावाः श्रूयन्ते । अयमपि यज्ञादनन्तरं यज्ञान्तरं यजति । स्वल्पोपादानं च अस्य । असंशयम् अत्र असौ वरमणिः तिष्ठति" इति ॥

एवं कृताध्यवसायः अन्यत्प्रयोजनमुद्दिश्य सकलयादवसमाजम् आत्मगेहे एव अचीकरत् । अत्र च उपविष्टेषु अखिलेषु यादवेषु प्रसङ्गागतपरिहासकथाम् अक्रूरेण सह कृत्वा जनार्दनः तमक्रूरमाह । "दानपते, जानीम एव वयं यथा शतधन्वना तदिदम् अखिलजगत्सारभूतं स्यमन्तकरत्नं समर्पितं भवतः सकाशे तिष्ठतीति । तिष्ठतु । सर्व एव वयं तत्प्रभावफलभुजः । किन्तु एष बलभद्रः अस्मानाशङ्कितवान् । तदस्मत्प्रीतये दर्शय" इति अभिहितः अक्रूरः अन्यथावचनं न क्षेममिति सञ्चिन्त्य तम् अखिलजगत्कारणभूतं नारायणमाह । "भगवन्, मम एतत्स्यमन्तकरत्नं शतधनुषा समर्पितम् । अपयाते च तस्मिन् अद्य श्वः परश्वो वा भगवान् मां याचिष्यतीति कृतमतिः अतिकष्टेन एतावत्कालम् अधारयम् । अस्य च धारणक्लेशेन अहम् अशेषोपभोगेषु असङ्गिमानसः न वेद्मि स्वसुखकलामपि । तदिदं स्यमन्तकरत्नं गृह्यताम् । इच्छया यस्याभिमतं तस्य समर्प्यताम्" एवमभिधाय सः स्यमन्तकमणिं निष्क्राम्य तत्र यदुसमाजे मुमोच । मुक्तमात्रे च तेन

अतिक्रान्त्या तदखिलमास्थानम् उद्योतितम् । तमालोक्य ममायम् इति बलभद्रः सस्पृहोऽभवत् । ममेदं पितृधनं इत्यतीव सत्यभामा स्पृहयांचकार । बलसत्याननावलोकनात् कृष्णोऽपि आत्मानं चक्रान्तरावस्थितमिव मेने । सकलयादवसमक्षं च अक्रूरं प्राह । "एतद्धि मणिरत्नं आत्मसंशोधनाय एषां यदूनां दर्शितम् । एतच्च मम बलभद्रस्य सामान्यम् । पितृधनं च एतत् सत्यभामायाः । नान्यस्य । एतत् सर्वकालं शुचिना ब्रह्मचर्येण च ध्रियमाणम् अशेषराष्ट्रस्य उपकारकम् । अशुचिना ध्रियमाणम् आधारमेव हन्ति । अतोऽहं षोडशस्त्रीसहस्रपरिग्रहात् असमर्थोऽस्य धारणे । कथं चैतत् सत्यभामा स्वीकरोतु । आर्यबलभद्रेणापि मदिरापानाद्यशेषभोगपरित्यागः कथं कार्यः! तदलं । यदुलोकोऽयं बलभद्रः अहं सत्या च त्वां दानपते प्रार्थयामः । एतद्भवानेव धारयितुं समर्थः । त्वत्स्थं चास्य राष्ट्रस्योपकारकम् । तद्भवान् अशेषराष्ट्रस्य उपकारनिमित्तम् एतत् पूर्ववद्धारयतु । त्वया अन्यथा न वक्तव्यम्" इत्युक्तो दानपतिः तथेत्युक्त्वा जग्राह तन्महारत्नम् । ततः प्रभृति च अक्रूरः प्रकटेनैव अतितेजसा जाज्वल्यमानेन मणिना आत्मकण्ठासक्तेन आदित्यः इव चचार ॥

इत्येतां भगवतः मिथ्याभिशास्तिक्षालनां यः स्मरति न तस्य कदाचित् अल्पापि मिथ्याभिशस्तिः भवति । अखिलपापमोक्षं च अवाप्नोति ॥

---

## महाराजमरणवर्णनम्

अथ कदाचिद्राजा राज्यवर्धनं कवचहरं आहूय हूणान् हन्तुं अपरिमितबलानुयातं उत्तरापथं प्राहिणोत् । प्रयान्तं च तं देवो

हर्षः कतिचित्प्रयाणकानि तुरङ्गमैः अनुवव्राज । प्रविष्टे च कैलास-प्रभाभासिनीं ककुभं भ्रातरि, तुषारशैलोपकण्ठेषु क्रीडन् मृगयां कति-पयानि अहानि बहिरेव व्यलम्बत । चकार च स्वल्पीयोभिरेव दिवसैः निःश्वापदानि अरण्यानि ॥

एकदा तु रात्र्याः तुरीये यामे प्रत्युषस्येव स्वप्ने दुर्निवारेण दव-हुतभुजा दह्यमानं केसरिणमद्राक्षीत् । तस्मिन्नेव दावदहने समुत्सृज्य शावकान् आत्मानं पातयन्तीं सिंहीं अपश्यत् । प्रबुद्धस्य चास्य मुहुर्मुहुः दक्षिणेतरदक्षि पस्पन्दे । अकारणादेव च अजायत गरीयसी दुःखा-सिका । किमिदमिति चिन्तया अवनमितवदनः चिक्रीड मृगयाम् ॥

आरोहति च सूर्ये मध्यमह्नः भवनमागत्य वेत्रपट्टिकाम् अधि-शयानः साशङ्क एव तस्थौ ॥

अथ दूरादेव लेखगर्भया चीरचीरिकया रचितमुण्डमालम् अन्त-र्गतेन शोकशिखिना अङ्गारतामिव नीयमानम्, कुरङ्गकनामानम् आया-न्तम् अद्राक्षीत् । दृष्ट्वा च पूर्वनिमित्ताविर्भावितभीतिः अभिद्यत हृदयेन ॥

कुरङ्गकस्तु कृतप्रणामः समुपसृत्य लेखम् उपनिन्ये । तं च देवो हर्षः स्वयमेव आदाय अवाचयत् । "कुरङ्गक किं मान्द्यं तातस्य?" इति च अभ्यधात् । स चक्षुषा बाष्पजलबिन्दुभिः मुखेन स्खलाक्षरैः आचचक्षे "देव, दाहज्वरो महान्" इति । तच्चा-कर्ण्य सहसा सहस्रधेवास्य हृदयं पफाल । कृताचमनश्च जनयितुरा-युष्कामः आत्मपरिबर्हम् अशेषं ब्राह्मणसादकरोत् । अभुक्तः एव उच्चचाल । वेपमानहृदयश्च तुरङ्गमारुह्य एकाक्येव प्रावर्तत । तूष्णीं भूतेन च भूपाललोकेन अनुगम्यमानः बहुयोजनमध्वानं एकेनैवाह्ना समलङ्घयत् । सायाह्ने भण्डिप्रमुखेण राजपुत्रलोकेन बहुशो विज्ञाप्य-मानोऽपि नाहारमकरोत् । बहलैव च निन्ये निशाम् ।

अन्यस्मिन्नहनि मध्यं दिने विगतजयशब्दम्, अस्तमिततूर्यनादम् उपसंहृतगीतम्, उत्सारितोत्सवम्, शून्यमिव, सुप्तमिव, विलक्षितमिव स्कन्धावारं समाससाद । क्रमेण राजद्वारं ययौ । तुरगादवतीर्णश्च अभ्यन्तरान्निष्क्रामन्तम् अप्रसन्नमुखरागं सुषेणनामानं वैद्यकुमारमद्राक्षीत् । कृतनमस्कारं च तमप्राक्षीत्—"सुषेण, अस्ति तातस्य विशेषः, न वा?" इति । सोऽब्रवीत्—"नास्ति इदानीम् । यदि भवेत् कुमारं दृष्ट्वा" इति । ततः मन्दं मन्दं द्वारपालैः प्रणम्यमानश्च राजकुलं विवेश । बाष्पपरिप्लुतलोचनेन च पितृपरिजनेन वीक्ष्यमाणः अवाप तृतीयं कक्ष्यान्तरम् ॥

तत्र च अतिनिश्शब्दे धवलगृहे स्थितं आत्मीकृतं अस्वास्थ्येन, विधेयीकृतं व्याधिना, मुहुर्मुहुः "आर्यपुत्र स्वपिषि?" इति व्याहरन्त्या देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं, पितरमद्राक्षीत् ॥

दृष्ट्वा च अन्तकपुरवर्तिनमेव पितरम् अमन्यत । निराकृत इव च अन्तःकरणेन क्षणमासीत् । अवधूतश्च धैर्येण, विषयीकृतो विषादेन, पावकमयमिव हृदयम् उद्वहन् न अविन्दत कर्तव्यम् ॥

अवनिपतिस्तु दूरादेव दृष्ट्वा अतिदयितं तनयम्, तदवस्थोऽपि निर्भरस्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजौ "एह्येहि" इति आह्वयन् शरीरार्धेन शयनादुदगात् । ससंभ्रमेण उपसृतं च एनं प्रेम्णा सुचिरम् आलिलिङ्ग । पस्पर्श च पुनःपुनः वेपथुमता पाणितलेन । क्षयक्षामकण्ठश्च अवादीत्—"वत्स, कृशोऽसि" इति । भण्डिस्तु अकथयत्—"देव, तृतीयमहः कृताहारस्यास्य अद्य" इति ॥

तच्छ्रुत्वा आयतं निश्वस्य उवाच—"वत्स, जानामि त्वां पितृप्रियम् अतिमृदुहृदयम् । अतिदुर्धरो बान्धवस्नेहः सर्वप्रमाथी ।

अतो नार्हसि आत्मानं शुचे दातुम्। उद्दामदाहज्वरदग्धोऽपि दह्ये खलु अहम् अधिकतरम् अनेन युष्मदाधिना। निशितं शस्त्रमिव तक्ष्णोति मां त्वदीयः तनिमा। सुखं च राज्यं च वंशश्च प्राणाश्च त्वयि मे स्थिताः। यथा मम, तथा सर्वासां प्रजानाम्। तदुत्तिष्ठ। कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वयि अहमपि स्वयम् उपयोक्ष्ये पथ्यम्" इति। क्षणमात्रं च स्थित्वा पित्रा पुनराहारार्थम् आदिश्यमानः धवलगृहादवततार॥

राजपुरुषेणाधिष्ठितश्च गत्वा स्वधाम, अग्निमयानिव कतिचित्क-बलान् अगृह्णात्। अगृहीतताम्बूलः एव उत्ताम्यता मनसा सर्वान् वैद्यान् आहूय उपह्वरे "किं विधेयम् अधुना" इति पप्रच्छ। ते तु व्यज्ञापयन्—"देव, धैर्यमवलम्बस्व। कतिपयैरेव वासरैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं श्रोष्यसि पितरम्" इति। तेषां तु भिषजां मध्ये युवा अष्टादशवर्षदेशीयः, कुलक्रमागतः, गतः पारमायुर्वेदस्य, भूभुजा सुतनिर्विशेषं लालितः रसायनो नाम वैद्यकुमारकः सास्रः तूष्णीम् अधोमुखोऽभूत्। पृष्टश्च राजसूनुना "सखे, रसायन, कथय तथ्यं" इति। सोऽब्रवीत्—"देव, श्वः प्रभाते यथावस्थितम् आवेदयितास्मि" इति। तदाकर्ण्य वाङ्निमित्तज्ञः पितरि सुतरां जीविताशां शिथिली-चकार॥

गतेषु च भिषक्षु क्षतधृतिः क्षपामुखे क्षितिपालसमीपमेव पुन-रारुरोह। तत्र च दाहग्रस्तस्य पितुः आलापान् अनवरतम् आकर्णयन् दूयमानहृदयः दुःखदीर्घां जाग्रदेव निशामनैषीत्॥

उषसि च अवतीर्य चरणाभ्यामेव स्वमन्दिरम् आजगाम। तत्र च त्वरमाणो भ्रातुरागमनार्थम् उपर्युपरि क्षिप्रपातिनो दीर्घाध्वगान् उष्ट्रपालान् प्राहिणोत्। प्रक्षालितवदनश्च परिजनोपनीतम् प्रतिकर्म नाग्रहीत्। अग्रतः स्थितानां राजपुत्रयूनां विमनसां "रसायनो

रसायनः" "इति जल्पितम् अव्यक्तम् अश्रौषीत् । किं रसायनः" इति पृष्टाश्च ते सर्वे सममेव तूष्णीं बभूवुः । भूयोभूयश्च अनुबध्यमानाः, "देव, पावकं प्रविष्टः" इति दुःखेन आचचक्षिरे । तच्च श्रुत्वा प्लुष्ट इव अन्तस्तापेन सद्यो विवर्णताम् अगात् । दुःखार्तश्च न जगाम राजसद्म । समुत्ससर्ज च सर्वकार्याणि । शयनीये निपत्य महोत्पात-दूयमानः कथमपि निनाय निशाम् ॥

अन्यस्मिन्नहनि, समीपमस्य राजभवनात्, "क्व कुमारः? क्व कुमारः? इति प्रतिपुरुषं पृच्छन्ती वेलेति नाम्ना यशोवत्याः प्रतीहारी आजगाम । उपसृत्य च "देव, परित्रायस्व परित्रायस्व । जीवत्येव भर्तरि किमप्यध्यवासितं देव्या" इति विज्ञापितवती । ततः तदाकर्ण्य च्युत इव सत्त्वेन, द्रुत इव दुःखेन, अप्रतिपत्तिरासीत् । उत्थाय च त्वरमाणो अन्तःपुरमगात् । तत्र च निर्यान्तीम्, दत्तसर्वस्वापतेयाम्, गृहीतमरणप्रसाधनाम्, मातरं ददर्श ॥

दूरादेव बाष्पायमाणदृष्टिः अभ्यधात् । "अम्ब, त्वमपि मां मन्दपुण्यं परित्यजसि । प्रसीद । निवर्तस्व" इति अभिदधान एव चरणयोः न्यपतत् । देवी तु यशोवती तथा तिष्ठति कनीयसि प्रेयसि तनये कृतप्रयत्नापि निवारयितुं न शशाक बाष्पोत्पतनम् । दूयमानमनसा च "हा! वत्स, विश्रान्तभागधेयया न दृष्टोऽसि" इति ज्येष्ठं तनयं स्मरन्ती, "अनाथा जाता" इति श्वशुरकुलवर्तिनीं दुहितरम् अनुशोचन्ती अतिचिरं प्रारोदीत् ॥

प्रशान्ते च मन्युवेगे सस्नेहम् उत्थापयामास सुतम् । हस्तेन चास्य प्ररुदितस्य क्षरन्तीं दृष्टिमुन्ममार्ज । अवादीत् च "वत्स नासि न प्रियो निर्गुणो वा परित्यागार्हो वा । अस्मिंश्च समये त्वां न पश्यति दृष्टिः । किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केसरिणः इव केसरिणीम् गृहिणीम् । वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता

कथमन्यथा कुर्यात् । मर्तुम् अविधवैव वाञ्छामि । न च शक्नोमि दग्धस्य भर्तुः आर्यपुत्ररहिता रतिरिव निरर्थकान् प्रलापान् कर्तुम् । मरणाच्च मे जीवितमेव अस्मिन् समये साहसम् । वत्स, विश्वस्तानां यशसा स्थातुमिच्छामि लोके, न वपुषा । तदहमेव त्वां प्रसादयामि, न पुनः मनोरथप्रातिकूल्येन कदर्थनीयास्मि " इति ॥

स तु कृतनिश्चयां च तां ज्ञात्वा, कुलयोषिदुचितां च तामेव श्रेयसीं मन्यमानः क्रियाम्, तूष्णीम् अधोमुखोऽभवत् । देव्यपि परिष्वज्य समाघ्राय च शिरसि निर्गत्य चरणाभ्यामेव अन्तःपुरात्, सरस्वतीतीरं ययौ । तत्र च भगवन्तं चित्रभानुं प्राविशत् । इतरोऽपि मातृमरणविह्वलः पितुः पार्श्वं प्रायात् । अपश्यच्च स्वल्पावशेषप्राणवृत्तिं जनयितारम् । आश्लिष्यास्य पादपद्मौ, चिरं रुरोद ॥

राजा तु तं अविरतरुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैः शनैरवादीत् । " पुत्र, नार्हस्येवं भवितुम् । भवाद्विधाः न हि अमहासत्वाः । सत्त्ववतां च अग्रणीः सर्वातिशयाश्रितः क्व भवान्, क्व वैक्लव्यम् कुलप्रदीपोऽसि । उह्यतां राज्यभारः निगृह्यतां चापलम् । " इत्येवं वदन्नेव अपुनरुन्मीलनाय निमिमील राजसिंहो लोचने । हुताशसंस्क्रियया च यशःशेषतामानीयत ॥

देवमपि हर्षं पितृशोकविह्वलीकृतम्, सर्वासु क्रियासु विमुखम्, संसारासारत्वकथनकुशलाः ब्रह्मवादिनः, शोकापनयननिपुणाश्च पौराणिकाः पर्यवारयन् । अनुनीयमानश्च तैः कथं कथमपि आहारादिकासु क्रियासु भ्रातृंगतहृदयश्च तस्यागमनम् उदीक्षमाणः अतिष्ठत् ॥

---

# गुरोरनुशासनम्.

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यंवद । धर्मंचर । स्वाध्यायान्मा प्रमदः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देव पितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव ॥

यान्यनवद्यानि कर्माणि तानि सेवितव्यानि । नो इतराणि । यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि । नो इतराणि । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ॥

एष आदेशः । एष उपदेशः । एतदनुशासनम् ॥

———

# रामकथासङ्ग्रहः.

---

**संपृक्तौ**—ಕೂಡಿಕೊಂಡಿರುವ. **सम्+√ पृच्** ವಿನ ಭೂತ ಕೃದ್ವಾಚಿ (Past Participle). **प्रतिपत्तये**—ತಿಳಿಯುವುದಕ್ಕಾಗಿ, **वाक् च अर्थः च वागर्थौ ; वागर्थयोः प्रतिपत्तिः, तस्यै । पितरौ–माता च पिता च** ಏಕಶೇಷವೃತ್ತಿ. **पर्वतस्यापत्यं स्त्री पार्वती ; पार्वती च परमेश्वरश्च- पा . . . रौ.**

Sloka 1. **तस्य**—ಇಲ್ಲಿ ದಶರಥನನ್ನು ನಿರ್ದೇಶಿಸಿ ಹೇಳಿದೆ. **पाकशासनस्य तेज इव तेजो यस्य सः–पा . . जाः ; तस्य अनूनर्द्धेः**—ಬಹಳ ಸಂಪತ್ತುಳ್ಳ **न ऊनं ऋद्धिः ; यस्य सः, तस्य. शरदामयुतं**—ಹತ್ತು ಸಾವಿರ ವರ್ಷಗಳು. **अयुतं**—ಹತ್ತುಸಾವಿರ.

,, 2. **ऋणनिर्मोक्षसाधनम्**—ಮನುಷ್ಯನಿಗೆ ಇರುವ ಪಿತೃಋಣವು ಪುತ್ರನನ್ನು ಪಡೆದ ಹೊರತು ಹೋಗುವುದಿಲ್ಲವೆಂಬ ನಂಬಿಕೆ ಇರುವುದರಿಂದ ಪುತ್ರನಿಗೆ ಈ ವಿಶೇಷಣವನ್ನು ಉಪಯೋಗಿಸಿದ್ದಾನೆ. **शोकतमोपहम्. शोक एव तमः, तदपहन्तीति ; तम्.**

,, 3. **जितात्मानः**—ಋಷಿಗಳು. **पुत्रीयाम् इष्टिं**—ಪುತ್ರನಿಮಿತ್ತವಾದ ಯಾಗವನ್ನು.

,, 4. **काम्यस्य कर्मणः अन्ते**—ಯಜ್ಞಗಳು ಕಾಮ್ಯಕರ್ಮಗಳೆಂದು ಭಾವನೆ. ಅದರಿಂದ ಇಲ್ಲಿ ಯಜ್ಞಕ್ಕೆ ಆ ಸಂಕೇತವನ್ನುಪಯೋಗಿಸಿರುವುದು. **ऋत्विजां विस्मयेन सह**—ಯಾಜ್ಞಿಕರ ಆಶ್ಚರ್ಯದೊಡನೆ, ಎಂದರೆ, ಅವರಿಗೂ ಆಶ್ಚರ್ಯವನ್ನುಂಟುಮಾಡುವಂತೆ. **सह+ ऋत्विजाम्**=ಇಲ್ಲಿ ಸಂಧಿ ನಿಯಮವನ್ನು ನೆನಸಿಕೊಳ್ಳಿ.

,, 5. **दोर्भ्याम्**—ಎರಡು ಕೈಗಳಿಂದ. **आद्यस्य पुंसः**—ವಿಷ್ಣುವಿನ. **पयश्चरुं**—ಪಾಯಸಾನ್ನವನ್ನು **पयसि पक्वः चरुः ; तम् । दुःखेन वोढुं शक्यं दुर्वहम्.**

Sloka 6. वैष्णवं—विष्णोः इदम् ।

,, 7. ईश्वर—ಎಂದರೆ ದಶರಥನು. सुमित्रां संभावितां एच्छत्—ಸುಮಿತ್ರೆಯು ಉಳಿದಿಬ್ಬರಿಂದ ಸನ್ಮಾನಿತಳಾಗುವಳೆಂದು ತಿಳಿದಿದ್ದುದರಿಂದ ಅವಳಿಗೆ ಕೊಡಲಿಲ್ಲ.

,, 8. बहुज्ञस्य—ಸರ್ವಜ್ಞನಾದ ಪತಿಯ चित्तज्ञे ಮನಸ್ಸನ್ನು ತಿಳಿದಂಥಾ ಅವರಿಬ್ಬರೂ.

,, 9. तमोपहम्—तमः अपहन्तीति तम्. । तमस्—ಕ್ಲೇಶ; ಕತ್ತಲೆ.

,, 10. अभिरामेण वपुषा ಮನೋಹರವಾದ ಶರೀರವಿದ್ದದ್ದರಿಂದ रामನೆಂದು ನಾಮಕರಣ ಮಾಡಿದನು.

,, 11. प्रश्रयः—ವಿನಯವು.

,, 12. आराधिता विद्या—ಅಭ್ಯಾಸಮಾಡಲ್ಪಟ್ಟ ವಿದ್ಯೆಯು प्रबोध-विनयाविव—ತತ್ವಜ್ಞಾನ ಇಂದ್ರಿಯ ನಿಗ್ರಹಗಳನ್ನು ಕೊಡುವಂತೆ. यमौ—ಅವಳ ಮಕ್ಕಳು.

,, 13. अलं—ಹೆಚ್ಚಾಗಿ उद्योतयामासुः—उद्+√द्युत् ಎನ णिजन्त (causal) ದ ಲಿಟ್. ಪ್ರ. ಬ. ಬೆಳಕುಮಾಡಿದರು. ಸಾಧಾರಣವಾಗಿ 10ನೇ ಗಣದ ಧಾತುಗಳೂ, णिजन्त, सन्नन्त ರೂಪಗಳೂ ಲಿಟ್ ಲಕಾರದಲ್ಲಿ आम् ಪ್ರತ್ಯಯವನ್ನು ತೆಗದುಕೊಳ್ಳುವುದಲ್ಲದೆ भू, कृ ಅಥವಾ अस् ಧಾತುವಿನ ಲಿಟ್ ರೂಪಗಳನ್ನು ಸೇರಿಸಿಕೊಳ್ಳುತ್ತವೆ.

,, 15. कौशिकेन—कुशिकस्य अपत्यं पुमान्ः तेन. काकपक्षधरः ಮುಂಗುರುಳನ್ನು ಧರಿಸಿರುವಂಥಾ ರಾಮನು.

,, 16. लब्धवर्णभाक्—ಜ್ಞಾನಿಗಳನ್ನು ಸೇವಿಸತಕ್ಕಂಥಾ लब्धाः वर्णाः यैस्ते ल- . . . र्णाः; तान् भजत इति.

Sloka 17. न मम्लतुः—ಬಾಡಲಿಲ್ಲ (√म्लै). मणिकुट्टिमोचितौ - ಮಣಿಖಚಿತವಾದ ಭೂಮಿಗೆ ಯೋಗ್ಯರಾದ.

,, 19. अर्हणाम्—ಪೂಜಾರ್ಥವಾಗಿ.

,, 21. अपास्त—ಹೋಗಲಾಡಿಸಲ್ಪಟ್ಟ. सांयुगीनम्—ಯುದ್ಧಕ್ಕೆ ತಕ್ಕಂಥಾ. संयुगे साधुः तम्. वाग्यतस्य—ಮೌನಿಯಾದ ಮುನಿಯ. क्रममनतिक्रम्य यथाक्रमम्.

,, 22. संभृतक्रतुः—ಯಜ್ಞವನ್ನು ಸಂಕಲ್ಪಿಸಿದ್ದಂಥಾವನು.

,, 23. यूपवति—ಯಜ್ಞದಲ್ಲಿ ‘ಯೂಪ’ವೆಂಬ ಸ್ತಂಭವನ್ನಿಡುವರು. ಅದರಿಂದ ಯಜ್ಞಕ್ಕೆ ಈ ಹೆಸರು. सति सप्तमि ಗೆ ಇಲ್ಲಿ ಉದಾಹರಣೆ ಇದೆ. ಅದನ್ನು ತಿಳಿಯಿರಿ. इष्व . . कम् अस्यते अनेनेति असनम्: इषूणां असनम्: तस्य दर्शने उत्सुकं. कथयां बभूव—*Cf.* उद्यानया मासुः (13).

,, 25. संसदा—ಸಭೆಯಿಂದ. विस्म . . तः—ಆಶ್ಚರ್ಯದಿಂದ ಎವೆಯಿಕ್ಕದ ಕಣ್ಣುಗಳಿಂದ ನೋಡಲ್ಪಟ್ಟವನಾಗಿ. पेशलं–ಕೋಮಲವಾದ.

,, 26. सङ्गरः—ಪ್ರತಿಜ್ಞೆ. ಈ ಪದದ ಇನ್ನೊಂದು ಸಾಧಾರಣಾರ್ಥ ವೇನೆಂಬುದನ್ನು ನೆನಪಿಗೆ ತನ್ನಿ.

,, 27. को . . ये प्राहिणोत्—‘ಕಳುಹಿಸು’ ಎಂದರ್ಥವುಳ್ಳ ಕ್ರಿಯಾ ಪದಗಳೊಡನೆ ಸ್ಥಾನನಿರ್ದಿಷ್ಟವಾದರೆ ದ್ವಿತೀಯಾ ವಿಭಕ್ತಿಯೂ ಪುರುಷ ನಿರ್ದಿಷ್ಟವಾದರೆ ಚತುರ್ಥೀ ವಿಭಕ್ತಿಯೂ ಉಪಯೋಗಿಸಲ್ಪಡುತ್ತವೆ. भृत्य-भावि दृश्यताम्—ಸೇವಕ ಭಾವನೆಯುಳ್ಳದ್ದೆಂಬುದನ್ನು ತೋರಿಸಿಕೊಡ ಬೇಕು. ಎಂದರೆ’ ಕನ್ಯಾ ಸ್ವೀಕಾರಮಾಡಿ ಕುಲವನ್ನುದ್ಧಾರಮಾಡ ಬೇಕೆಂಬ ಅಭಿಪ್ರಾಯ.

,, 28. उद्वहः—ವಂಶಜನು. पृथिव्याः अपत्यं स्त्री पार्थिवी: ताम्.

Sloka 29. **आत्मसंभवान् + तान्**—ಇಲ್ಲಿನ ಸಂಧಿ ಕಾರ್ಯವನ್ನು ನೆನಪಿನಲ್ಲಿಡಿ. **आत्तरतिः**-ಸಂತೋಷಪಟ್ಟಂಥಾ ; **निवेश्य**-ವಿವಾಹಮಾಡಿ. ಸಾಧಾರಣವಾದ ಅರ್ಥವೇನು ?

,, 30. **पलित**—ಬಿಳಿಕೂದಲು. **पलितस्य छद्म ; तेन-प . . ना**

,, 32. **तत्संश्रुतौ—तेन संश्रुतौ.** ಕೊಡಲ್ಪಟ್ಟಿದ್ದ **उद्ववाम**—**उद्+√वम्** ನ ಲಿಟ್ ಪ್ರ. ಏ. ಕಾರಿದಳು. ಈ ಶ್ಲೋಕದಲ್ಲಿ ಯಾವ ಯಾವುದಕ್ಕೆ ಹೋಲಿಕೆ ಇದೆಯೆಂಬುದನ್ನು ಗಮನಿಸಿ.

,, 33. **समाः**—ವರ್ಷಗಳು. **प्राव्राजयत्**—ಹೋಗುವಂತೆ ಮಾಡಿದಳು. **प्र+√व्रज्** ನ **णिजन्त** (causal) ರೂಪದ ಲಙ್ ಪ್ರ. ಏ. **वैधव्यैकफलां**—ತನ್ನ ಮಗನಾದ ಭರತನಿಗೆ ರಾಜ್ಯವನ್ನು ಕೊಡಿಸಬೇಕೆಂದೇ ರಾಮನನ್ನು ವನವಾಸಕ್ಕೆ ಕಳುಹಿಸಿದುದು. ಆದರೆ ಭರತನು ರಾಜ್ಯ ಸ್ವೀಕಾರ ಮಾಡದೆ ರಾಮನ ವನವಾಸ ಗಮನ ದುಃಖದಿಂದ ದಶರಥನು ಮರಣಹೊಂದಿದ್ದರಿಂದ ಕೈಕೇಯಿಯ ಪ್ರಯತ್ನವೆಲ್ಲವೂ ಅವಳಿಗೆ ವೈಧವ್ಯ ಫಲವನ್ನು ಮಾತ್ರ ತಂದಂತಾಯಿತು.

,, 35. **सीतालक्ष्मणसखः ;—सीतालक्ष्मणयोः सखा. सखि, राजन्** ಮತ್ತು **अहन्**—ಈ ಶಬ್ದಗಳು ತತ್ಪುರುಷ ಸಮಾಸಾಂತ್ಯದಲ್ಲಿ अ ಕಾರಾಂತವಾಗಿ ನಿಲ್ಲುತ್ತವೆ.

,, 37. **आमिषतां ययौ**—ಆಶೆಪಡುವ ವಸ್ತುವಾಗಿ ಆಯಿತು.

,, 38. **मौलैः**—ಕುಲಕ್ರಮವಾಗಿ ಬಂದ ಆಪ್ತ ಮಂತ್ರಿಗಳ ಮೂಲಕ.

,, 40. **आश्रमालयैः**—ವನವಾಸಿಗಳಿಂದ **आश्रमे आलयः येषां ते ; तैः । उदश्रुः**—ಕಣ್ಣೀರುಬಿಡುತ್ತಾ.

,, 41. **स्वर्गतिः**—ಮರಣ. **निमन्त्रयां चक्रे**—ಆಹ್ವಾನಿಸಿದನು.

,, 45. **पञ्चवट्यां--पञ्चानां वटानां समाहारः ; तस्याम्. अनपोढस्थितिः**—ಬೇರೆಯಾಗದ ಸ್ಥಿತಿಯಲ್ಲಿ. **न अपोढः स्थितिः यस्य सः.**

Sloka 46. **व्याली**—ಹೆಣ್ಣು ಸರ್ಪ. **मलयद्रुमं**—ಚಂದನ ವೃಕ್ಷವನ್ನು.

,, 47. **वृषस्यन्तीं**—ಕಾಮುಕಳಾದಂಥಾ. **वृषस्कन्धः**—ಎತ್ತರವಾದ ಹೆಗಲುಳ್ಳ ರಾಮನು.

,, 49. **वेला**—ಅಲೆ.

,, 52. **मञ्जुवादिनीं**—ಮನೋಹರವಾಗಿ ಮಾತನಾಡುವವಳನ್ನು. **विकृता**—ಮಾಯಾವಿನಿಯು.

,, 53. **विकृष्टासिः**—ಒರೆಯಿಂದ ಹೆರೆದ ಕತ್ತಿಯುಳ್ಳವನಾಗಿ **वैरूप्यस्य पौनरुक्त्यं; तेन**—ಮೊದಲೇ ವಿಕಾರ ರೂಪಿಯಾದ ಅವಳ ಕಿವಿ ಮೂಗುಗಳನ್ನು ಕತ್ತರಿಸಿ ಮತ್ತೂ ವಿಕಾರ ರೂಪವುಳ್ಳವಳನ್ನಾಗಿ ಮಾಡಿದನು. ಎಂದು ಅಭಿಪ್ರಾಯ.

,, 54. **पर्व**—ಬಿದುರಿನ ಗಂಟು.

,, 57. **दृप्तान्**—ಅಹಂಕಾರಿಗಳನ್ನು. **आशंसां**—ಆಶೆಯನ್ನು.

,, 58. **तावान्+च=तावांश्च**—ಇಲ್ಲಿನ ಸಂಧಿನಿಯಮವನ್ನು ನೆನಪಿಗೆ ತನ್ನಿ. **आजौ**—ಯುದ್ಧದಲ್ಲಿ.

,, 59. **उत्कृत्ते**—ನಾಶಮಾಡಲ್ಪಟ್ಟ.

,, 60. **प्रवृत्तिः**—ವಾರ್ತೆ.

,, 62. **दशरथप्रीतेरनृणं**—ದಶರಥನ ಸ್ನೇಹಿತನಾದ ಜಟಾಯುವು ಅವನ ಮಗನ ಪಕ್ಷದಲ್ಲಿ ಕಾದುದರಿಂದ ಆ ಸ್ನೇಹದ ಋಣವನ್ನು ಹರಿಸಿಕೊಂಡನೆಂದು ಭಾವ.

,, 63. **संस्थितः**—ಮರಣ ಹೊದಿದನು. (सं+√स्था).

,, 64. **व्यापत्तिः**—ಮರಣವು. **वव्रृतिरे**—ಮಾಡಿದರು. √वृत् ನ ಲಿಟ್ ಪ್ರ. ಬ.

Sloka 65. **निर्धूत**—ಬಿಡಲ್ಪಟ್ಟ. **मुमूर्छ**—ಬೆಳೆಯಿತು. (√**मुर्छ्**).

,, 68. **प्रवृत्तौ**—ಸಮಾಚಾರವು **उपलब्धायां** (**सत्यां**) ಇದು **सति-सप्तमी** ಗೆ ಉದಾಹರಣೆ. **निर्मम:**—ಅಹಂಕಾರವಿಲ್ಲದ ಅಥವಾ ನಿಸ್ಪೃಹನಾದ ಮನುಷ್ಯನು ಸಂಸಾರ ಸಾಗರವನ್ನು ಹೇಗೆ ಸುಲಭವಾಗಿ ದಾಟುತ್ತಾನೆಯೋ ಹಾಗೆ.

,, 70. **प्रत्युद्गतमिव**—ಎದುರಿಗೆ ಎದ್ದು ಬರುತ್ತದೆಯೋ ಎಂಬಂತೆ.

,, 71. **निर्वाप्य**—(**निस्**+√**वप्**) ತಿಳಿಸಿ, ಅರಿಕೆ ಮಾಡಿಕೊಂಡು.

,, 72. **कृती**—ಕೃತಕೃತ್ಯನಾದ.

,, 73. **उदन्तं**—ವರ್ತಮಾನವನ್ನು. **परिक्षेपं**—ಸುತ್ತು. **परिखाल-घुम्**—ಕೋಟೆಯ ಕಂದಕದಷ್ಟು ಸುಲಭದ್ದನ್ನಾಗಿ.

,, 74. **अनुद्रुत:**—ಕೂಡಿದವನಾಗಿ **संबाधवर्तिभि:**=ಒಟ್ಟುಗೂಡಿ ಹೋಗತಕ್ಕಂಥಾ.

,, 75. **निविष्टम्**—ಇದ್ದಂಥಾ.

,, 76. **प्रतिशुश्राव**—ಮಾತುಕೊಟ್ಟನು. **समारब्धा:**—ಕೈಗೊಂಡ, **फलं बध्नन्ति**—ಫಲವನ್ನುಂಟುಮಾಡುತ್ತವೆ.

,, 77. **प्लवंगै:**—ಕಪಿಗಳಿಂದ **शार्ङ्गिण: स्वप्नाय**—ವಿಷ್ಣುವಿನ ಶಯನಕ್ಕೋಸ್ಕರ. **रसतलात् उन्मग्नं शेषमिव**—ಪಾತಾಳದಿಂದ ಎದು ಬಂದ ಆದಿಶೇಷನಂತೆ ಇದ್ದಂಥಾ.

,, 78. **पिङ्गल**—ಹೊಂಬಣ್ಣ.

,, 82. **विलापाचार्यकं**—**विलापे आचार्यकं** (ಬೋಧಕತ್ವ) ಅಳುವುದನ್ನುಪದೇಶ ಮಾಡಿದನು, ಎಂದರೆ, ಅನೇಕ ರಾಕ್ಷಸರನ್ನು ಕೊಂದನು ಎಂದಭಿಪ್ರಾಯ.

,, 83. **नपर्यशेषयत्**—ಸ್ವಲ್ಪವನ್ನೂ ಉಳಿಸಲಿಲ್ಲ. ಎಂದರೆ, ಅವನನ್ನು ಸಂಹಾರಮಾಡಿದನು. ಇಲ್ಲಿರುವ ಹೋಲಿಕೆಗಳನ್ನು ಗಮನಿಸಿ.

Sloka 84. **स्वसुः तुल्यावस्थः कृतः**—ಶೂರ್ಪಣಖಿಗಾದಂತೆ ಅಂಗ ವಿಚ್ಛೇದನವಾಯಿತು ಎಂದರ್ಥ. **टङ्कच्छिन्नमनःशिलः**—**टङ्केन-छिन्ना मनःशिला यस्य सः** ಟಂಕವೆಂಬ ಅಸ್ತ್ರದಿಂದ ಹೊಡೆಯಲ್ಪಟ್ಟು ರಕ್ತವನ್ನು ಸುರಿಸುತ್ತಾ.

,, 85. **प्रियस्वप्नः**—ಇಷ್ಟನಿದ್ರೆಯುಳ್ಳ **प्रियः स्वप्नः यस्य सः इतीव**—ಹೀಗೆಂಬುವಂತೆ.

,, 86. **पेतुः**—√**पत्** ವಿನ ಲಿಟ್. ಪ್ರ. ಬ.

,, 88. **वरूथिनम्**—**वरूथः** (ರಥವು) **अस्यास्तीति; तम्. हरियुग्यं**—ಕೆಂಪು ಕುದರೆಯಿಂದ ಕೂಡಿದ. **युग्यं**—ರಥದ ಕುದರೆ.

,, 89. **चरितार्थमिवाभवत्**—ಸಫಲವಾದಂತೆ ಆಯಿತು. ಸರಿಯಾದ ಎದುರಾಳುಗಳಿಲ್ಲದೆ ಒಬ್ಬೊಬ್ಬರ ಪರಾಕ್ರಮವೂ ವ್ಯಕ್ತವಾಗಿರಲಿಲ್ಲ. ಈಗ ಅವರ ಪರಾಕ್ರಮವು ಸಾಫಲ್ಯವನ್ನು ಹೊಂದಿತು. ಎಂದರೆ, ಯುದ್ಧವು ಅಷ್ಟು ಜೋರಾಗಿ ನಡೆಯಿತೆಂದರ್ಥ.

,, 90. **निघ्नतोः**—ಪ್ರತಿಕ್ರಿಯೆ ಮಾಡುತ್ತಿರುವಂಥಾ ಅವರಿಬ್ಬರ. **जय-संरम्भः**—ಜಯಾಕಾಂಕ್ಷೆಯು.

,, 91. **अयः शङ्कुचितां**—ಲೋಹದ ಮೊಳೆಗಳಿಂದ ಕೂಡಿರುವ. **शत-घ्नीं**—ಒಂದು ಗದಾವಿಶೇಷ. **कूटशाल्मलिः**—ಯಮನ ಪಟ್ಟಣದಲ್ಲಿ ತಪ್ಪುಮಾಡವರನ್ನು ಶಿಕ್ಷಿಸುವುದರಲ್ಲಿ ಉಪಯೋಗಿಸುವ ಮುಳ್ಳುಗಳಿಂದ ಕೂಡಿದ ಒಂದು ಹತ್ತಿ ಮರದ ಹೆಸರು

,, 93. **शल्यं**—ಬಾಣದ ಕೊನೆ.

,, 96. **संगमय्य**—ಸೇರಿಸಿ.

,, 97. **निस्तीर्य**—ಮುಗಿಸಿ. **समां वृत्ति**—ಧರ್ಮಾರ್ಥಕಾಮಗಳಲ್ಲಿಯೂ, ತನ್ನ ತಮ್ಮಂದಿರಲ್ಲಿಯೂ, ಸಹ ಯಾರಲ್ಲಿಯೂ ಪಕ್ಷಪಾತವಿಲ್ಲದೆ ಒಂದೇ ಸಮನಾಗಿ ನೋಡಿಕೊಳ್ಳುತ್ತಿದ್ದನು.

---

# एकलव्योपाख्यानम्.

Sloka 1. **ततः**—ದ್ರೋಣಾಚಾರ್ಯರನ್ನು ಭೀಷ್ಮನು ಕರತಂದು ತನ್ನ ಮೊಮ್ಮಕ್ಕಳಿಗೆ ಅಸ್ತ್ರವಿದ್ಯೆಯನ್ನು ಕಲಿಸುವಂತೆ ಮಾಡಿದನಂತರ. **द्विपदां**-ಮನುಷ್ಯರಲ್ಲಿ. **द्वौ पादौ येषां ते द्विपदः तेषाम्. ताञ्शिष्यान्-तान् + शिष्यान्** ಇಲ್ಲಿನ ಸಂಧಿನಿಯಮವನ್ನು ಜ್ಞಾಪಕಕ್ಕೆ ತನ್ನಿ. **महेष्वासः** ಶ್ರೇಷ್ಠವಾದ ಬಿಲ್ಲುಗಾರನು. **ग्राहयामास**—√**ग्रह्** ವಿನ **णिजन्त** ರೂಪದ ಲಿಟ್. ಪ್ರ. ಏ.

,, 5. **ऐन्द्रिम्**—ಅರ್ಜುನನನ್ನು.

,, 8. **धनुर्वेदजिघृक्षवः**—ಧನುರ್ವಿದ್ಯೆಯನ್ನು ಕಲಿಯಬೇಕೆಂಬ ಅಪೇಕ್ಷೆಯುಳ್ಳವರಾಗಿ **सामाजग्मुः**—**सं + आ + √गम्** ವಿನ ಲಿಟ್. ಪ್ರ. ಬ.

,, 10. **नैषादिः**—**निषादानां अयम् नैषादः नैषादस्य अपत्यम् पुमान् । अन्वेक्षया**—ದಾಕ್ಷಿಣ್ಯದಿಂದ.

,, 12. **परन्तपः**—**परान्** (ಶತ್ರುಗಳನ್ನು) **तपतीति । महीमयम्**-ಮಣ್ಣಿನಿಂದ ಕೂಡಿದ.

,, 13. **इष्वस्त्रे योगम् आतस्थे**-ಬಿಲ್ಲುಬಾಣಗಳನ್ನು ಸೇರಿಸುವುದರಲ್ಲಿ ನಿರತನಾಗಿದ್ದನು. ಎಂದರೆ, ಬಾಣಪ್ರಯೋಗವನ್ನು ಅಭ್ಯಾಸ ಮಾಡುತ್ತಿದ್ದನು.

,, 14. **सन्धानम्**—ಸೇರಿಸುವುದು. **आप**—ಹೊಂದಿದನು. **√आप्** (ಹೊಂದು) ನ ಲಿಟ್. ಪ್ರ. ಏ.

,, 15. **विनिर्ययुः**—ಹೊರಗೆ ಸಂಚಾರಕ್ಕೆ ಹೋದರು. **वि + नि + √या** ವಿನ ಲಿಟ್. ಪ್ರ. ಬ.

,, 16. **यदृच्छया**—ಹಟಾತ್ತಾಗಿ. **चिकीर्षया**—**कर्तुं इच्छा चिकीर्षा; तया.**

,, 17. **जग्मिवान्** (**आसीत्**)—ಹೋಯಿತು.

Sloka 18. **मलदिग्ध**—ಕೆಸರಿನಿಂದ ಕೊಳೆಯಾದ. **भषन् + तस्थौ**, ಇಲ್ಲಿ ಸಂಧಿ ನಿಯಮವನ್ನು ತಿಳಿಯಿರಿ,

,, 19. **युगपद्यथा**—ಒಟ್ಟಿಗೆ ಬಿಟ್ಟರೆ ಹೇಗೋ ಹಾಗೆ.

,, 21. **शब्दवेधित्वं**—ಶಬ್ದವನ್ನು ತಿಳಿದು ಅಸ್ತ್ರಪ್ರಯೋಗ ಮಾಡುವಿಕೆ. ಮತ್ತಾರ್‍ಯರಿಗೆ ಈ ಶಕ್ತಿಯಿತ್ತೆಂಬುದನ್ನು ಜ್ಞಾಪಕಕ್ಕೆ ತನ್ನಿ. **व्रीडिताः**—ಲಜ್ಜೆಯುಳ್ಳವರಾಗಿ.

,, 22. **राजन् + अस्यन्तं**—ಇಲ್ಲಿನ ಸಂಧಿಯ ನಿಯಮವೇನು ?

,, 23. **कस्य वा**—ಯಾರವನು ?

,, 27. **परिरभ्य**—ಅಪ್ಪಿಕೊಂಡು. **त्वद्विशिष्टः**—ನಿನ್ನನ್ನು ಮೀರಿದವನಾಗಿ.

,, 31. **जगाम शिरसा महीम्**—ಸಾಷ್ಟಾಂಗ ನಮಸ್ಕಾರ ಮಾಡಿದನು.

,, 33. **वेतनं**—ಗುರುದಕ್ಷಿಣೆಯು.

,, 36. **सत्ये नियतः**—ಸತ್ಯದಲ್ಲಿ ಗಮನವುಳ್ಳವನಾಗಿ. **विगतज्वरः**—ದುಃಖರಹಿತನಾಗಿ. **विगतःज्वरः यस्यसः.**

---

# मध्यमव्यायोगः.

Sloka 1. ಇದು ಮಂಗಳ ಶ್ಲೋಕ. ಹೀಗೆ ಪ್ರತಿ ನಾಟಕದ ಆದಿಯಲ್ಲಿಯೂ ದೇವಸ್ತುತಿರೂಪವಾದ ಮಂಗಳ ಶ್ಲೋಕಗಳಿರುತ್ತವೆ.

**असुरवधूहृदयावसादः**—**अवसादः**—ಕುಗ್ಗಿರುವುದು. **कुवलयामलखड्गनीलः**—ಕನ್ನೈದಲೆಯಷ್ಟು ನಿರ್ಮಲವಾಗಿರುವ ಖಡ್ಗದಂತೆ ಕಪ್ಪಾಗಿರುವ. **प्रोद्यतः (सन्)**—ಎತ್ತಲ್ಪಟ್ಟದ್ದಾಗಿ. **अम्बरसागरस्य**—ಆಕಾಶವೆಂಬ ಸಾಗರದ. **वैढूर्यसङ्क्रमइव**—ವೈಢೂರ್ಯದ ಮೆಟ್ಟಲಿನಂತೆ ಇರುವ. **विज्ञापनव्यग्रे**—**व्यग्रः**—ಮನಸ್ಸುಳ್ಳವನಾಗಿ

ರೂಪ. नेपथ्ये — ಪರದೆಯಿಂದ. वि | √त्रस् ಇದ णिजन्त ದ ಲುಙ್. ಪ್ರ. ಪು. ನಾಟಕ ಕಥಾವಸ್ತುವಿಗೆ ಅಂಕುರಾರ್ಪಣವಾದ್ದರಿಂದ ಇದಕ್ಕೆ स्थापना ಅಥವಾ प्रस्तावना ಎಂದು ಹೆಸರು. ಇದು ಪೀಠಿಕೆಯನ್ನು ಸೂಚಿಸುತ್ತದೆ.

Sloka 2. **कलभदशनदंष्ट्रः** — ಆನೆಮರಿಯ ಕೋರೆದಾಡೆಗಳಂತೆ ಹಲ್ಲುಗಳುಳ್ಳ. **कलभदशनौ इव दंष्ट्रे यस्यसः । लाङ्गलाकारनासः** — **लाङ्गलं**- ನೇಗಲು. **जीमूतः** — ಮೇಘ.

,, 3. **नियोगात्** — ಅಪ್ಪಣೆಯಿಂದ. **विप्रकृष्टदेशस्थः** — ಆಶ್ರಮದಿಂದ ದೂರದಲ್ಲಿ. **विप्रकृष्टे देशे तिष्ठतीति । समयतः** — ಒಪ್ಪಂದದ ಮೇಲೆ. **निसर्गार्थे** — ಹೋಗುವುದಕ್ಕೆ, ಮುಗಿಯುವುದಕ್ಕೆ. **परिमृग्य** — ಹುಡುಕಿ. **अनिष्टः** — ಇಷ್ಟವಿಲ್ಲದವನು, ಬೇಕಿಲ್ಲದವನು.

,, 5. **बन्धुस्नेहात् . . . . . दुर्लभः** — ಮಹತ್ತರವಾದ ಬಂಧುಸ್ನೇಹದ ದೆಸೆಯಿಂದ (ಬಂಧುಗಳಿಗೋಸ್ಕರ) ಕಾಲಸ್ನೇಹವನ್ನು ಮಾಡುವ, (ಮರಣ ಹೊಂದುವ), ಸಂಭವವು ಅತಿವಿರಳ. **जलाशय** — ಕೊಳ. **प्रकल्पितपरलोकस्य** — ಪರಲೋಕಕ್ಕೆ ಹೋಗಲು ಸಿದ್ಧನಾಗಿರುವ. **प्रकल्पित्तः परलोकः यस्यसः ; तस्य. परिमुषिताः** — ದರೋಡೆ ಮಾಡಲ್ಪಟ್ಟವು.

,, 7. **अवध्यानां** — ಪಾಂಡರೆಂದರ್ಥ.

,, 8. **परास्यसि** — परा + √अस् — ಹಿಂಸಿಸು. **विनिमातुम्** — ಬದಲಾಯಿಸುವುದಕ್ಕೆ. **भीतानामायुधम् गृहीतम्** — ಭಯವುಳ್ಳವರು ಆಯುಧವನ್ನು ಹಿಡಿದು ಯುದ್ಧಮಾಡಬೇಕೆಂದು ಶಾಸ್ತ್ರವಿರುವುದರಿಂದ ನೀನು ಭೀತನಾದವನಾದವನಾದರೆ ಆಯುಧವನ್ನು ಹಿಡಿದು ನನ್ನೊಡನೆ ಯುದ್ಧಕ್ಕೆ ಬಾ ಎಂದು ಅಭಿಪ್ರಾಯ.

,, 13. **उपपन्नं** — ತಕ್ಕುದ್ದು. **क्षिपति मे गुरुम्** — **भवान्** ಎಂಬ ಪದವನ್ನು ಅಧ್ಯಾಹಾರ ಮಾಡಿಕೊಳ್ಳಿ. **गिरिकूटम्** — ಬೆಟ್ಟದ ಶಿಖರವನು

**ईदृशमिव**—ಇದು ಮಾಳವ ಕಥೆಯಲ್ಲಿ ಬರುವ ಮಾತು. ಕವಿಯು ಹೇಳುವ ಮಾತೇನೆಂಬುದು ನಮಗೆ ಗೊತ್ತಾಗುವುದಿಲ್ಲ. ಅದನ್ನು ಊಹಿಸಬೇಕಾಗಿದೆ. "ನಿನ್ನನ್ನು ಬರಮಾಡಿಕೊಳ್ಳುವುದಕ್ಕೆ ಹೀಗೆ ಮಾಡಿದೆ; ಮನುಷ್ಯ ಹಿಂಸೆಗೋಸ್ಕರವಲ್ಲ" ಎಂದು ಹೇಳಿದ ಹಾಗೆ ಊಹಿಸಬಹುದು. ಅದರಿಂದಲೇ ಬೇಡುತ್ತಾನೆ. '**जात्या राक्षसी । न समुदाचारेण**—ಎಂದು ಹೇಳುವನು. **समुदाचार** ವೆಂದರೆ ಒಳ್ಳೇ ನಡತೆ, 'ಜಾತಿಯಲ್ಲಿ ರಾಕ್ಷಸಿಯಾದಾಗ್ಯೂ, ನಡತೆಯಲ್ಲಿ ಹಾಗಲ್ಲ.' ಆ ಕೂಡಲೇ ಅವಳ ಹಿಂದಿನ ನಡತೆಯು ಜ್ಞಾಪಕಕ್ಕೆ ಬರುತ್ತದೆ. ಹಿಡಿಂಬನ ವನದಲ್ಲಿ ತಾನೂ, ತನ್ನವರೂ, ಅವಳಿಂದ ಪಡೆದ ಸನ್ಮಾನವನ್ನು ಸ್ಮರಿಸಿಕೊಳ್ಳುವಂತೆ ಆಗುತ್ತದೆ.

Sloka 16. **गहने वने**—ದಟ್ಟವಾದ ಕಾಡಿನಲ್ಲಿ. **धार्तराष्ट्रवनदावाग्निः**—ಕೌರವರೆಂಬ ವನಕ್ಕೆ ಕಾಡುಗಿಚ್ಚಿನೋಪಾದಿಯಲ್ಲಿರುವ. **धृतराष्ट्रस्य अपत्यानि पुमांसः धार्तराष्ट्राः ; त एव वनं ; तस्य दावाग्निः. पुत्रचापल्यम्**—ಮಗನ ಅವಿವೇಕವನ್ನು ಅಥವಾ ದುಡುಕನ್ನು. **व्यतिक्रमकृतं**—ವಿಪರೀತವಾಗಿ ನಡೆದದ್ದು. **क्षान्तमेव**—ನಮಗೆ ಸಿಟ್ಟು ಬಾರದಲ್ಲೇ, ಮಗನಪರಾಕ್ರಮಾತಿಶಯಗಳನ್ನು ತಿಳಿಯಲು ಅವಕಾಶವಾದ್ದರಿಂದ. **गच्छतु भवान् पुनर्दर्शनाय**—ಕನ್ನಡದಲ್ಲಿ 'ಹೋಗಿ ಬನ್ನಿ'. ಎಂಬುವಂತೆ. **सम्भावयिष्यामः**—(ಅನುಸರಿಸಿ ಹೋಗುವುದರಿಂದ) ಮನ್ನಣೆ ಮಾಡೋಣ.

---

# स्यमन्तकोपाख्यानम्.

**कनकभारान्**—ಎಪ್ಪತ್ತೆಂಟು ಚಿನ್ನಕ್ಕೆ **भार** ವೆಂದು ಹೆಸರು. **स्रवति** (√स्रु) ಹೊರಡಿಸುತ್ತದೆ. ಯಾವಾಗಲೂ ಆಗುತ್ತಿದ್ದ ಕಾರ್ಯವನ್ನು ನಿರ್ದೇಶಮಾಡುವುದಕ್ಕೆ ಇಲ್ಲಿ ವರ್ತಮಾನಕಾಲರೂಪವನ್ನು ಹೇಳಿದೆ. **उपसर्गाः**—ಕೇಡುಗಳು. **लिप्सां**—ಹೊಂದುವ ಇಚ್ಛೆಯನ್ನು; √लभ् ನ **सन्नन्त** (Desiderative) ರೂಪ. **गोत्रभेदभयात्**—ಸ್ವಂತ ಜನರಲ್ಲಿ ಕಲಹವು ಹುಟ್ಟುತ್ತೆಂಬ ಭಯದಿಂದ. **जहार**—√हृ ನ ಲಿಟ್

ಪ್ರ. ಏ. **कर्णाकर्ण्यकथयत्**—ಕಿವಿಯಿಂದ ಕಿವಿಗೆ ಪಿಸುಗುಟ್ಟಿದರು. **क्रीडनकः**—ಆಟದಸಾಮಾನು. **व्याजहार**—ಕೂಗಿಕೊಂಡಳು. **अमर्षपूर्णहृदयः**—अमर्षेण पूर्णं हृदयं यस्य सः. **निष्क्रान्तिम्**—ಹಿಂತಿರುಗಿಬರುವುದನ್ನು. **उपरतक्रियाकलापम्**—ಸತ್ತವರಿಗೆ ಮಾಡತಕ್ಕ ಕ್ರಿಯೆಗಳನ್ನು. **कलापः**—ಹಿಂಡು, ಸಮುದಾಯ. उपरतानां क्रियाः उ . . . याः ; तासां कलापः ; तम्. **अभिशस्तिः**—ದೂಷಣೆ. मिथ्या च सा अभिशस्तिश्च मि ....स्तिः ; तस्याः विशुद्धिः ; ताम्. **अभूतमालिनम्**—ಇಲ್ಲದ ಅಪವಾದವನ್ನು. **सन्त्रासः**—ಹೆದರಿಕೆ. **वैरानुबन्धं चक्रुः**—ದ್ವೇಷವನ್ನು ಬೆಳೆಸಿದರು.

**स्यन्दनं**—ರಥ. **समन्विच्छितवान्**—ಅನುಮೋದಿಸಿದವನಾದನು. **न्यासं कृत्वा**—ಒತ್ತೆಯಿಟ್ಟು. **वडवा**—ಹೆಣ್ಣು ಕುದುರೆ. **दृष्टदोषाः. हयाः**—ಕುದುರೆಗಳಿಗೆ ಹಾನಿಯುಂಟಾಗುತ್ತದೆ. **क्रोश**—ಒಂದು ಕೂಗಿ ನದೂರ. **अर्थलिप्सुः**—ದ್ರವ್ಯಾಶೆಯುಳ್ಳವನು. **अलीकशपथैरलम्**—ಸುಳ್ಳುಪ್ರಮಾಣಗಳು ಸಾಕು. 'ಸಾಕು' ಎಂಬರ್ಥದಲ್ಲಿ ಬಂದಾಗ **अलम्**—ಶಬ್ದದೊಡನೆ ತೃತೀಯಾವಿಭಕ್ತಿ ಬರುತ್ತದೆ. **अवगन्तृभिः**—ತಿಳಿದಂಥಾವರಿಂದ. **मरकः**—ಅಂಟುರೋಗ. **स्वल्पोपादानं चास्य**—ಇವನಿಗಿರುವ ಅನುಕೂಲವು ಅಲ್ಪವೇ.

**अध्यवसायः**—ನಿಶ್ಚಯ. **अस्मानाशङ्कितवान्**—ನಮ್ಮಲ್ಲಿ ಅನುಮಾನ ಪಟ್ಟಿರುತ್ತಾನೆ. **अभिहितः**—ಹೇಳಲ್ಪಟ್ಟವನಾಗಿ. अभि + √धा ಎನ ಧಾತುಕೃದ್ರೂಪ (Past participle form). **अन्यथा वचनं न क्षेमम्**—ಸುಳ್ಳಾಡುವುದರಿಂದ ಮುಂದೆ ಒಳ್ಳೇದಾಗಲಾರದು. **असङ्गिमानसः**—ಮನಸ್ಸನ್ನಿಡದವನಾಗಿ. **सस्पृहः**—ಆಶೆಯಿಂದ ಕೂಡಿದವನಾಗಿ. **मेने**—ತಿಳಿದನು. √**मन्**—ಎನ ಲಿಟ್ ಪ್ರ. ಏ. **आधारमेव**—ಧರಿಸಿದವನನ್ನೇ. **प्रकटेनेव**—ಎಲ್ಲರಿಗೂ ತಿಳಿಯುವಂತೆಯೇ

———

# महाराजमरणवर्णनम्.

**राजा**—ಇಲ್ಲಿ ಈ ಶಬ್ದವು ಹರ್ಷದೇವನ ತಂದೆಯಾದ ಪ್ರಭಾಕರವರ್ಧನನನ್ನು ಸೂಚಿಸುತ್ತದೆ. **कवचहरं**—ಕವಚವನ್ನು ಧರಿಸಲು ಸಮರ್ಥನಾದ, ಎಂದರೆ, ಯುದ್ಧಮಾಡಲು ಯೋಗ್ಯನಾದ. **कवचं हरति (स्वीकरोति) इति : तम् ।** **प्राहिणोत्**—ಕಳುಹಿಸಿದನು. **प्र+√हि** ನ ಲಙ್ ಪ್ರ. ಏ. **प्रयाणकम्**—ಒಂದು ದಿನದ ಪ್ರಯಾಣಕ್ಕೆ ಹೆಸರು; ಮಜಲು. **ककुभं**—ದಿಕ್ಕನ್ನು. **निश्वापदानि**—ಕಾಡುಮೃಗಗಳಿಲ್ಲದಂತೆ.

**तुरीये**—ನಾಲ್ಕನೆ. **दवहुतभुजा**—ಕಾಡುಕಿಚ್ಚಿನಿಂದ. **दुःखासिका**—ದುಃಖದ ಸರದಿ. **वेत्रपट्टिकां**—ಬೆತ್ತದ ಕರ್ಚಿಯಲ್ಲಿ. ಮುಂದೆ **अधि शी** ಬಂದಿರುವುದರಿಂದ ಇಲ್ಲಿ ಸಪ್ತಮ್ಯರ್ಥದಲ್ಲಿ ದ್ವಿತೀಯಾ ಬಂದಿದೆ. **चीर-चीरिकया**—ಹರಕುಬಟ್ಟೆಯಿಂದ. **अन्तर्ग . . . म**—ಕುರಂಗಕನು ಕಪ್ಪಾಗಿದ್ದನು ಎಂದು ಹೇಳುವುದಕ್ಕೆ ಬದಲು ಕವಿಯು ಸಂದರ್ಭಾನುಸಾರ ಉತ್ಪ್ರೇಕ್ಷೆಮಾಡಿ ಹೇಳಿದ್ದಾನೆ. **अभिद्यत हृदयेन**—ಎದೆಯೊಡೆದು ಹೋಯಿತು.

**उपनिन्ये**—**उप+√नी** ನ ಲಿಟ್ ಪ್ರ. ಏ. **खञ्जाक्षरैः**—ತೊದಲು ನುಡಿಗಳಿಂದ **परिबर्हं**—ರಾಜಚಿಹ್ನೆಗಳನ್ನು **ब्राह्मणसात्**—ಬ್ರಾಹ್ಮಣರಿಗೆ ಕೊಡತಕ್ಕದ್ದಾಗಿ.

**तूर्यम्**—ವಾದ್ಯವಿಶೇಷ. **स्कन्धावारं**—ರಾಜಧಾನಿಯನ್ನು. **कक्ष्यान्तरम्**—ಒಳಗಿನ ಹಜಾರವನ್ನು. **धवलगृहे**—ಅಂತಸ್ತಿನ ಮನೆ. **अवधूतः**—ತಿರಸ್ಕರಿಸಲ್ಪಟ್ಟವನಾಗಿ. **अतिदयितं**—ಬಹಳಪ್ರೀತಿಪಾತ್ರನಾದ. **निर्भरस्नेहावर्जितः**—ವಿಶೇಷಪ್ರೀತಿಯಿಂದ ಕೂಡಿದವನಾಗಿ.

**आयतं**—ದೀರ್ಘವಾಗಿ. **अतिदुर्धरः**—ತಡೆಯಲಸಾಧ್ಯವಾದ. **सर्वप्रमाथी**—ಎಲ್ಲವನ್ನೂ ಅಲ್ಲೋಲಕಲ್ಲೋಲಮಾಡುತ್ತದೆ. **तनिमा**—ಕೃಶತ್ವವು. **उपयोक्ष्ये**—ಉಪಯೋಗಿಸುತ್ತೇನೆ. **उप+√युज**—ನ ಲೃಟ್. ಉ. ಏ. **उत्ताम्यता मनसा**—ಕಲಕಿದ ಮನಸ್ಸಿನಿಂದ. **अष्टादशवर्षदेशीयः**—ಸುಮಾರು ಹದಿನೆಂಟು ವರ್ಷ ವಯಸ್ಸುಳ್ಳ, 'ಸ್ವಲ್ಪ

ಕಡಿಮೆ' ಎಂಬರ್ಥದಲ್ಲಿ देशीय ಪ್ರತ್ಯಯವು ಬಂದಿದೆ. सुतनिर्विशेषं–ಮಕ್ಕಳ ಸಮಾನವಾಗಿ. शिथिलीचकार—ಬಿಟ್ಟುಬಿಟ್ಟನು.

क्षतधृतिः—ಧೈರ್ಯವನ್ನು ಕಳಕೊಂಡವನಾಗಿ. क्षपा—ರಾತ್ರಿ. दुःखदीर्घां दुःखेन दीर्घीकृतां। अनैषीत्—ಕಳೆದನು. √नी—ನ ಲುಙ್, ಪ್ರ. ಏ. क्षिप्रपातिनः—ಬೇಗನೆ ಹೋಗತಕ್ಕಂಥಾವರು. प्रतिकर्म—ಅಲಂಕಾರವನ್ನು. प्लुष्ट इव—ಸುಟ್ಟವನಂತೆ. √प्लुष्. महोत्पात दूयमानः—ಅದ್ಭುತವಾದ ದುಃಶಕುನಗಳಿಂದ ಮನನೊಂದವನಾಗಿ. महान्तश्चते उत्पाताः ; तैः दूयमानः—ಮಹಾಪುರುಷರು ಗತಿಸುವಾಗ ಅನೇಕ ದೊಡ್ಡ ದೊಡ್ಡ ದುಃಶಕುನಗಳಾಗುವುದುಂಟು. अध्यवसितं—ನಿಶ್ಚಯಿಸಲ್ಪಟ್ಟಿತು. अप्रतिपत्तिः—ಬುದ್ಧಿಶೂನ್ಯನು. स्वापतेयम्—ಸ್ವಂತ ಆಸ್ತಿ. प्रसाधनं—ಅಲಂಕಾರ.

क्षरन्तीं—ನೀರು ಸುರಿಸುತ್ತಿರುವ. त्वां न पश्यति दृष्टिः—ನಿನ್ನನ್ನು ನೋಡಿಕೊಂಡು ಇರುವ ಸಮಯವಲ್ಲ ಎಂಬ ಭಾವ. शौण्ड—ಪಳಗಿದ ಅಲಂಕಾರ ಪ್ರಾಯನಾದ. पुरुषप्रकाण्डस्य, प्रशस्तः पुरुषः पुरुषप्रकाण्डः ; तस्य—ಮನುಷ್ಯ ಶ್ರೇಷ್ಠನ. विश्वस्तानां—ವಿಧವೆಯರಲ್ಲಿ. कदर्थनीया—ಕಳವಳಪುಳ್ಳವಳಾಗಿ. वैक्लव्यम्—ಅಧೈರ್ಯ. विक्लवस्य भावः. निमिमील—ಮುಚ್ಚಿದನು. नि + मील् ನ ಲಿಟ್, ಪ್ರ. ಏ. विह्वलीकृतं—ಮನನೊಂದ, ब्रह्मवादिनः—ವೇದಾಂತಿಗಳು. अनुनीयमानः—ಪ್ರೇರಿಸಲ್ಪಟ್ಟವನಾಗಿ.

---

# गुरोरनुशासनम्.

अनूच्य—ಪಾಠಹೇಳಿ. अनु + √वच्. अन्तेवासिनम्—ಶಿಷ್ಯನನ್ನು. अन्तेवसतीति ; तम्. अनुशास्ति—ಉಪದೇಶಮಾಡುತ್ತಾನೆ. स्वाध्याय—ಸ್ವಂತ ವೇದದ ಅಧ್ಯಯನ. मा प्रमदः—ಅಜಾಗರೂಕ

ನಾಗಿರಬೇಡ, ಇದು ನಿಜವಾಗಿಯೂ **मा+अप्रमदः** (**प्र+√मद्** ವಿನ ಲುಙ್ ಮ. ಏ.), ನಿಷೇದಾರ್ಥದ **मा** ಒಡನೆ ಬಂದಲ್ಲಿ ಲುಙ್ ನಲ್ಲಿ ಬರುವ **अडागम** ವು ಹೋಗಿಬಿಡುವುದು, ಮಧ್ಯಮಪುರುಷ ಪ್ರಯೋಗ ವಿದ್ದರೆ ಅದಕ್ಕೆ **लोट्** ಲಕಾರದರ್ಥವು ಬರುವುದು. **प्रवचनं**—ಮತ್ತೊಬ್ಬರಿಗೆ ಹೇಳಿಕೊಡುವ ವೇದಪಾಠ. **अनवद्यानि** ದೋಷರಹಿತಗಳಾದ. **उपास्यानि**—ಪೂಜಿಸಲ್ಪಡಬೇಕು. **नो**—ಪ್ರತಿಬಂಧಕಾವ್ಯಯ, ಇದು ವೇದಗ್ರಂಥಗಳಲ್ಲಿ ಬರುವುದು ಹೆಚ್ಚು. **संविदा**-ಪದ್ಧತಿಯನ್ನನುಸರಿಸಿ.

---